आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १२

# तैत्तिरीयोपनिषत्सटीकशाङ्कर-भाष्योपेता ।

पण्डित वामनशास्त्री इसलामपुरकर इत्येतैः
संशोधिता ।




तथाच

शंकरानन्दकृता तैत्तिरीयोपनिषद्दीपिका ।

विद्यारण्यकृता तैत्तिरीयोपनिषद्दीपिका ।

एतत्पुस्तकद्वयमानन्दाश्रमस्थपण्डितैः संशोधितम् ।

एतानि

महादेव चिमणाजी आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितानि ।

शालिवाहनशकाब्दाः १८११



मूल्यं त्रयो रूपका आणकाः पञ्च ३-५-।

## तैत्तिरीयोपनिषद आदर्शपुस्तकानि येषां मिलितानि तेषां नामानि पुस्तकानां संज्ञाश्च प्रदर्श्यन्ते ।

---

(क.) इतिसंज्ञितम्—तैत्तिरीयोपनिषद्भाष्यं वैराजक्षेत्रनिवासिनां वे. शा. सं. शिवराम विश्वेश्वर शास्त्री भट्ट इत्येतेषाम् ।

(ख.) इतिसंज्ञिता—तैत्तिरीयोपनिषत्सटीका काश्यां शिलामुद्रिता रा. रा. महादेव चिमणाजी आपटे इत्येतेषाम् । मुद्रणकालः संवत् १९४१

(ग.) इतिसंज्ञिता—तैत्तिरीयोपनिषत्सटीका इन्दूरपुरनिवासिनां किबे इत्युपाह्वानां श्री. रा. रा. भाऊसाहेब बाळासाहेब इत्येतेषाम् ।

(घ.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्भाष्योपेता पुण्यपत्तननिवासिनां खासगीवाले इत्युपाह्वानां श्री. रा. रा. तात्यासाहेब इत्येतेषाम् ।

(ङ.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्भाष्योपेता पुण्यपत्तननिवासिनां खाजगीवाले इत्युपाह्वानां श्री. रा. रा. तात्यासाहेब इत्येतेषाम् ।

(च.) इतिसंज्ञितम्—तैत्तिरीयोपनिषद्भाष्यं शिक्षाभृगुवल्लीद्वयात्मकं समूलं सटीकं खेडकरोपाह्वानां श्री. रा. रा. आनंदराव लक्ष्मण (भाऊसाहेब) इत्येतेषाम् ।

(छ.) इतिसंज्ञितम्—तैत्तिरीयोपनिषद्भाष्यं विंचूरपुरनिवासिनां श्री. रा. रा. रावसाहेब अण्णासाहेब इत्येतेषाम् ।

(ज.) इतिसंज्ञिता—तैत्तिरीयोपनिषत्सटीका विंचूरपुरनिवासिनां श्री. रा. रा. रावसाहेब अण्णासाहेब इत्येतेषाम् ।

(झ.) इतिसंज्ञिता—तैत्तिरीयोपनिषत्सटीका विंचूरपुरनिवासिनां श्री. रा. रा. रावसाहेब अण्णासाहेब इत्येतेषाम् । लेखनकालः शाके १६३२

(ञ.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्भाष्यटीकोपेता करवीरपुरनिवासिनां श्रीयुतानां वे.शा.सं. गुरुमहाराजानाम् । लेखकालः संवत् १८६६

(ट.) इतिसंज्ञितम्—तैत्तिरीयोपनिषद्भाष्यं करवीरपुरनिवासिनां द्रविडोपाह्वानां वे. शा. सं. रा. रा. नानाशास्त्रिणाम् ।

(ठ.) इतिसंज्ञितम्—तैत्तिरीयोपनिषद्भाष्यं समूलं सटीकं कलिकातानगरे मुद्रितं पुण्यपत्तननिवासिनां के. वे. शा. सं. देवोपाह्वबालशास्त्रिणाम् ।

(ड.) इतिसंज्ञितम्—तैत्तिरीयोपनिषद्भाष्यं सटीकं नागपुरनिवासिनां श्री. रा. रा. अप्पासाहेब बुटी इत्येतेषाम् ।

(क.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्दीपिका शंकरानंदकृता पुण्यपत्तननिवासिनां श्री. रा. रा. भाऊसाहेब नगरकर इत्येतेषाम्।

(ख.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्दीपिका शंकरानंदकृता वटोदरनिवासिनां पटवर्धन इत्युपाह्वानां रा. रा. कृष्णराव भीमाशंकर इत्येतेषाम्।

(ग.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्दीपिका शिक्षावल्लीमात्रा शंकरानंदकृता शान्तिजसकाशादागता*

(घ.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्दीपिका शंकरानंदकृता रा. रा. महादेव चिमणाजी आपटे इत्येतैः प्रेषिता †

(क.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्दीपिका समूला विद्यारण्यकृता मुम्बापुरनिवासिनां बोडस इत्युपाह्वानां वे. शा. सं. महामहोपाध्याय इत्युपाधिधारिणां राजारामशास्त्रिणाम्। लेखनकालः शाके १७३९

(ख.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्दीपिका समूला विद्यारण्यकृता वडलीग्रामनिवासिनां श्रीयुतानां वे. शा. सं. चिदम्बरदीक्षितकुलोत्पन्नानां मार्तण्डदीक्षितानाम्। लेखनकालः शाके १७७४

(ग.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्दीपिका समूला विद्यारण्यकृता रत्नागिरिनिवासिनां आगाशे इत्युपाह्वानां वे. शा. सं. महामहोपाध्याय इत्युपाधिधारिणां बाळशास्त्रिणाम्।

(घ.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्दीपिका समूला विद्यारण्यकृता वैराजपुरनिवासिभिर्बापटोपाह्वैः रा. रा. कृष्णराव इत्येतैः प्रेषिता।

(ङ.) इतिसंज्ञिता—तैत्तिरीयोपनिषद्दीपिका समूला विद्यारण्यकृता डाक्तर इत्युपाधिधारिणां विदुषां भाण्डारकर इत्युपाह्वानां रा. रा. रामकृष्णगोपालानाम्। लेखनकालः शाके १७२१

---

* एतत्स्वामिनो नाम न ज्ञायते। † एतत्स्वामिनो नाम न ज्ञातम्।

# तैत्तिरीयोपनिषत् ।

## आनन्दगिरिकृतटीकासंवलितशाङ्करभाष्यसमेता ।

---

अथ श्रीमच्छङ्करभगवत्पादविरचितं भाष्यम् ।

---

ॐ नमः परमात्मने ।

यस्माज्जातं जगत्सर्वं यस्मिन्नेव प्रलीयते ।
येनेदं धार्यते चैव तस्मै ज्ञानात्मने नमः ॥ १ ॥
यैरिमे गुरुभिः पूर्वं पद-वाक्य-प्रमाणतः ।
व्याख्याताः सर्व[1]वेदान्तास्तान्नित्यं प्र[2]णतोऽस्म्यहम् ॥ २ ॥

---

### अथ आनन्दगिरिकृता टीका ।

यत् प्रकाशसुखाभिन्नं य[3]न्मत्रेण प्रकाशितम् ।
विवृतं ब्राह्मणे तत्स्यामहश्यं ब्रह्म निर्भयम् ॥ १ ॥

यजुर्वेदशाखाभेदं तैत्तिरीयकोपनिषदं व्याचिख्यासुर्भगवान्भाष्यकारस्तत्प्रतिपाद्यं ब्रह्म जगज्जन्मादिकारणत्वेन तटस्थलक्षणेन मन्दमतीन्प्रति सामान्येनोपलक्षितं, सत्यज्ञानादिना च स्वरूपलक्षणेन विशेषतो विनिश्चितं नमस्का[4]रच्छलेन सङ्क्षेपतो दर्शयति । **यस्माज्जातमिति** । निमित्तोपादानत्वयोः पञ्चम्याः साधारण्यादुभयविधमपि[5] हेतु[6]त्वमविवक्षितम् । कार्यविलयस्य प्रकृतावेव नियतत्वात् विशेषतः प्रकृतित्वमाह । **यस्मिन्निति** । कार्यसाधारणस्य निमित्ते[7] धर्मा[8]दावपि प्रसिद्धत्वात् साधा[9]रणकारणत्वमाह । **येनेति** । ज्ञानात्मन इति स्वरूपलक्षणसूचनम् ॥ १ ॥

गुरुभक्तेर्विद्याप्राप्तावन्तरङ्गसाधनत्वं ख्यापयितुं गुरून्प्रणमति । **यैरिति** । पदानि च वाक्यानि च प्रमाणं चानुमानादि तद्विवेचनेन व्याख्याता [10]इति ॥ २ ॥

---

१ क. घ. च. छ. ज. झ. °व विधी° । ञ. °व विली° । २ ञ. °णमाम्य° । ३ ख. ग. च. ज. झ. ट. °यन्मात्रेण । ४ ख. ग. च. °रबले° । ५ क. ख. ग. ज. ट. °पि कारणत्व° । ६ क. ख. ग. च. ज. झ. ट. °त्वमिहावि° । ७ क. ख. ग. च. ज. ट. °त्तेपि ध° । ८ क. ख. ग. च. ज. ट. र्मादौ प्र° । ९ ख. ग. ज. °रणं का° । १० क. ख. ग. च. ज. ट. °इत्यर्थः ।

ॐ तत्सद्ब्रह्मणे नमः ।

**शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा ।**
**शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः ।**

---

तैत्तिरीयकसारस्य मयाऽऽचार्यप्रसादतः ।
विस्पष्टार्थरुचीनां हि व्याख्येयं सम्प्रणीयते ॥ ३ ॥

नित्यान्यधिगतानि कर्माण्युपात्तदुरितक्षयार्थानि, काम्यानि च फलार्थिनां पूर्वस्मिन्ग्रन्थे । इदानीं कर्मोपादानहेतु[1]परिहाराय ब्रह्मविद्या प्रस्तूयते । कर्महेतुः कामः स्यात् । प्रवर्तकत्वात् । आप्तकामानां हि कामाभावे

---

चिकीर्षितं[2] निर्दिशति । **तैत्तिरीयकेति** । व्युत्पन्नस्य पदेभ्य एव पदार्थ[3]स्मृतिसम्भवात् [4]पदस्मारितपदार्थानां[5] संसर्गस्यैव वाक्यार्थत्वात् सूत्रकारेणो[6]पनिषत्तात्पर्यस्य निरूपितत्वाच्च व्यर्थः पृथग्व्याख्यारम्भ इत्याशङ्क्याह । **विस्पष्टार्थेति** । मन्दमतीनां स्वत एव निःशेषपदार्थस्मरणासम्भवात् उपनिषद्गतनिःशेषपदार्थानां[7] विशिष्य निःसंशयं ज्ञानं ये रोचयन्ते तेषामुपकारायेत्यर्थः ॥ ३ ॥

कर्मविचारेणवोपनिषदो गतार्थत्वादुपनिषत्प्रयोजनस्य निःश्रेयसस्य कर्मभ्य एव संभवात् पृथग्व्याख्यारम्भो न युक्त इत्याशङ्कामपनेतुं कर्मकाण्डार्थमाह । **नित्यानीति** । "अथाऽतो धर्मजिज्ञासा" इति जैमिनिना धर्मग्रहणेन सिद्धवस्तुविचारस्य पर्युदस्तत्वान्नोपनिषदो गतार्थत्वमित्यर्थः । तानि च कर्माणि सञ्चितदुरितक्षयार्थानि । "धर्मेण पापमपनुदति" इति श्रुतेर्न निःश्रेयसार्थानि । न केवलं जीवतोऽवश्यकर्तव्यान्यधिगतानि फलार्थिनां काम्यानि च । न तान्यपि निःश्रेयसार्थानि । "स्वर्गकामः पशुकाम" इत्यादिवन्मो[8]क्षकामोऽदः कुर्यादित्यश्रवणात् । अतः संसार एव कर्मणां फलमित्यर्थः ।

कर्मकाण्डार्थमुक्त्वा तत्राविचारितमुपनिषदर्थमाह । **इदानीमिति** । कर्मणामुपादाने[9]ऽनुष्ठाने यो हेतुस्तन्निवृत्त्यर्थं ब्रह्मविद्याऽस्मिन्ग्रन्थे[10] आरभ्यते । अतः सनिदानकर्मोन्मूलनार्थत्वादुपनिषदः कर्मकाण्डविरुद्धत्वान्न गतार्थत्वमित्यर्थः । कर्मानुष्ठाने हेतुर्नियोगः तस्य प्रमाणसिद्धत्वान्न विद्यया विरोध इत्याशङ्क्याह । **कर्महेतुरिति** । अस्येदं साधनमित्येतावच्छास्त्रेण बोध्यते । यस्य यत्राभिलाषः स तत्र प्रवर्तते कामत एव । अतो न नियोगस्य प्रवर्तकसम्भावनापीत्यभिप्रायः । सति कामे प्रवृत्तिरित्यन्वय उक्तः । कामाभावे न प्रवृत्तिरिति व्यतिरेकमाह । **आप्तेति** । अभिलषितविषयप्राप्तिः कामनिवृत्तौ

---

१ घ. छ. ज. °तुनिवृत्त्यर्थं ब्र° । २ ख. ग. च. °तं दर्शयति । ३ ज. °र्थ संस्मृ° । ४ क. ट. °पदैः संस्मा° । ख. ज. °पदैःस्मा° । ५ झ. °दार्थसं° । ६ झ. °रेणौप° । ७ ख. ग. च. ज. झ. ट. °नां निर्वि° । ८ ट. °इतिवन्मो° । ९ क. ख. ग. च. ज. झ. ट. °र्मण उपा° । १० झ. °न्थे प्रार° ।

**नमो ब्रह्मणे। नमस्ते वायो। त्वमेव**

स्वात्मन्यवस्थानात् प्रवृत्त्यनुपपत्तिः। आत्मकामत्वे[1] चाऽऽप्तकामता। आत्मा हि ब्रह्म। तद्विदो हि परप्राप्तिं वक्ष्यति। अतोऽविद्यानिवृत्तौ स्वात्मन्यवस्थानं परप्राप्तिः। "अभयं प्रतिष्ठां विन्दते। एतमानन्दमयमात्मानमुपसंक्रामति" इत्यादिश्रुतेः[2]। काम्यप्रतिषिद्धयोरनारम्भादार[3]ब्धस्य[4] चोपभोगेन[5] क्षयान्नित्यानुष्ठानेन[6] प्रत्यवायाभावादयत्नत एव स्वा[7]त्मन्यवस्थानं मोक्षः। अथवा निरतिशयायाः[8] प्रीतेः स्वर्गशब्दवाच्यायाः कर्महेतुत्वात्कर्मभ्य एव मोक्ष-इति चेन्न। कर्मानेकत्वात्। अनेकानि

हेतुः। न विद्या। अतः कथं कर्महेतुपरिहाराय विद्यारम्भ इत्याशङ्क्याह। **आत्मकामत्वे[9] चेति**। कामितविषयप्राप्त्या[10] कामस्य तात्कालिकोपशममात्रं नतूच्छेदः। पुनर्विषयाकाङ्क्षादि[11]दर्शनात्। आत्मकामिना[12]पि निरङ्कुशा—आत्मैव वस्तु नान्यत्ततोऽस्तीत्येवंरूपा आत्मकामत्वे सति भवति। कामिते[13]च्छाभावादात्मनो ह्यद्वयानन्दरूपमजानन्नेव व्यतिरिक्तं विषयं पश्यन् कामयते। ततः कामस्यात्माऽविद्यामूलत्वादात्मविद्यैव तन्निवृत्ति हेतुरित्यर्थः। भवत्वात्मविद्या कामविरोधिनी कर्महेतुपरिहाराय ब्रह्मविद्या प्रस्तूयत-इति कथमुक्तं तत्राह। **आत्मेति**। आनन्दमयं परमात्मानमादाय श्रुतिरुदाहृता।

एवं तावत्कर्मकाण्डेनागतार्थत्वात्कर्मभ्योऽसम्भाव्यमाननिःश्रेयसप्रयोजनत्वाच्चोपनिषदो व्याख्यारम्भं संभाव्य पुनर्[14]रारम्भवादिनोऽभिप्रायमुद्भावयति। **काम्य-प्रतिषिद्धयोरिति**। आत्यन्तिकागामिशरीरानुत्पादे स्वरूपावस्थानं निःश्रेयसं, शरीरानुत्पादश्च हेत्वभावादेव सेत्स्यति किं ज्ञानार्थोपनिषदारम्भेणेत्यर्थः। मतान्तरमाह। **अथवेति**। यदेव स्वर्गसाधनं ज्योतिष्टोमादि तदेव मोक्षसाधनं निरतिशयप्रीतेः। स्वर्गपदार्थस्य मोक्षादन्यत्रासम्भवात् सति शरीरे क्लेशावश्यम्भावादित्यर्थः[15]। एकभविकप[16]क्षमाधं मतं प्रत्याख्याति। **नेत्यादिना**। यद्यपि वर्तमाने देहे काम्यं प्रतिषिद्धं च नारभेत मुमुक्षुः। तथापि सञ्चितस्यानेकस्य सम्भवाद्धेत्वभावोऽसिद्ध इत्यर्थः। प्रायेणानभिव्यक्तानि सर्वाण्येव कर्माणि सम्भूय एकं शरीरमारभन्ते, तत्र सर्वेषामुपभोगेन क्षयितत्वात् सञ्चितं कर्मैव नास्ती-

१ ग. च. °त्वेनाऽऽप्त° । २ ङ. °तेः । ननु का° । ३ ङ. °म्भात् प्राग° । ४ ङ. °व्धयोश्चोप° । ५ ख. ग. घ. च. छ. ज झ. °भोगक्ष° । ६ ङ. °न च प्र° । ७ क. झ. स्वात्मान° । ८ ङ. अ. °शयप्री° । ९ ग. च. °त्वेनेति । १० ख. ग. च. ज. °प्राप्ती का° । ११ क. ख. ग. च. ज. ट. °काङ्क्षाद° । १२ क. ख. ट. झ. °मताऽपि । १३ क. ख. ज. ट. कामयितव्याभावादेवात्मानं ह्य° । १४ क. ख. ग. च. ज. झ. °नरनारं° । १५ ख. °र्थः । एक° । १६ क. झ. °पक्षं प्रत्याह । ने° ।

प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि ।

ह्यारब्ध[1]फलान्यनारब्धफलानि चानेकजन्मान्तरकृतानि विरुद्धफलानि कर्माणि सम्भवन्ति । अतस्तेष्वनारब्धफलानामेकस्मिञ्जन्मन्युपभोगक्षयासम्भवाच्छेषकर्मनिमित्तशरीरारम्भोपपत्तिः कर्मशेष[2]सद्भावसिद्धिश्च । "तद्य[3] इह रमणीयचरणाः । ततः[4] शेषेण " इत्या[5]दिश्रुति-स्मृतिशतेभ्य इष्टानिष्टफलानामनारब्धानां क्षयार्थानि नित्यानीति चेन्न । अकरणे प्रत्यवायश्रवणात् । प्रत्यवायशब्दो ह्यनिष्टविषयः । नित्याकरणनिमित्तस्य प्रत्यवाय[6]स्य दुःखरूपस्यागामिनः परिहारार्थानि नित्यानीत्यभ्युपगमात् न अनारब्धफलकर्मक्षयार्थानि । यदि नामाऽनारब्धकर्मक्षयार्थानि नित्यानि कर्माणि तथाप्यशु[7]द्धमेव क्षपयेयुर्न[8] शुद्धम् । विरोधाभावात् । न हि इष्ट फलस्य कर्मणः शुद्धरूपत्वान्नित्यै[9]र्विरोध उपपद्यते । शुद्धा[10]शुद्धयोर्हि विरोधो युक्तः । न च कर्महेतूनां कामानां ज्ञानाभावे निवृत्त्यसंभवादशेषकर्मक्षयोपपत्तिः । अनात्मविदो हि कामोऽनात्मफलविषयत्वात्स्वात्मनि च कामानुपपत्तिर्नित्यप्राप्तत्वात्स्वयं चात्मा परं ब्रह्मेत्युक्तम् ।

ति शङ्कानिराकरणायोक्तम् । **विरुद्धफलानीति** । स्वर्ग-नरकफलानां ज्योतिष्टोम-ब्रह्महत्यादीनामेकस्मिन्देहे भोगेन क्षयासम्भवात् प्रायेणास्य सर्वाभिव्यञ्जकत्वे प्रमाणाभावात् बलवता प्रतिबद्धस्य दुर्बलस्यावस्थानं[11] सम्भवतीत्यर्थः । सम्भावनामात्रमेतन्नात्र प्रमाणमस्तीत्याशङ्क्याह । **कर्मशेषेति** । प्रेत्य स्वैकं[12] कर्माऽनुभूय ततः शेषेण जन्म प्रतिपद्यन्त[13] इति स्वर्गादवरोह[14]तां कर्मशेष[15]सद्भावं दर्शयतीत्यर्थः । संचितकर्मसद्भावमङ्गीकृत्य देहान्तरारम्भो न भविष्यतीत्याह । **इष्टेति** । एतद्[16]वादिनां सिद्धान्तविरुद्धमित्याह । **नेति** । मुमुक्षुणानुष्ठितस्य नित्यादेः सञ्चितकर्मक्षयार्थत्वाभ्युपगमेऽपि नाभिमतसिद्धिरित्याह । **यदि नामेति** । यच्चोक्तं मुमुक्षुः काम्यानि वर्जयेत्-इति तदप्यसति विवेकबले दुर्घटम् । सति मूलाज्ञाने कामोद्भवस्य दुर्निवारत्वादित्याह । **न च कर्महेतूनामिति** । ननु-कामो नाज्ञानमूलः । आत्मविदामपि कामदर्शनादित् इत्यत आह । **स्वात्मनि चेति** ।

१ अ. °ब्धकर्मफ° । २ घ. °षसंभव° । ३ क. °द्यादिह° । ४ क. ङ. ञ. °तः कर्मशे° । ५ ञ. °दिस्मृति° । ६ ङ. °यस्यासुखरू° । ७ ख. ग. च. °शुभमे° । ८ घ. °र्न पुनःशुद्धम्° । ९ ख. ग. घ. ङ. च. छ. ञ. ट. °शुद्धिरू° । १० घ. ङ. छ. ट. °शुद्धाशुद्धयोर्हि । ११ च. °नं न सं° । १२ क. ख. ग. च. ज. झ. ट. स्वकर्मफलमनु° । १३ ज. झ. °पद्यत° । १४ ज. झ. °हणं कुर्व° । १५ क. ख. ग. च. ज. ट. °शेषं द° । १६ क. ख. ग. च. झ. ट. °भद्दानां ।

**ऋतं वदिष्यामि । सत्यं वदिष्यामि ।**

**नित्यानां चाकरणमभावः ततः प्रत्यवायानुपपत्तिरिति । अतः पूर्वोपचितदुरितेभ्यः प्राप्यमाणायाः प्रत्यवायक्रियाया नित्याकरणं लक्षणमिति "अकुर्वन्विहितं कर्म" इति हि शतुर्नानुपपत्तिः । अन्यथाऽभावाद्भावो-**

सर्वं[1] आत्मेतिपश्यतां तत्त्वतो विषयाभावादेव कामानुपपत्तिः । अशनादिप्रवृत्तिनिमित्तं तु कामाभास एव । वास्तवाभिनिवेशाभावादित्यर्थः । तेषामप्यर्चिरादिमार्गेण ब्रह्मप्राप्तेः कामनाऽस्तीति नाशङ्कनीयमित्याह । **स्वयं चेति** । यच्चोक्तमकरणनिमित्तप्रत्यवायपरिहारार्थानि नित्यानीति तत्राह । **नित्यानां चेति** । आगामि दुःखं प्रत्यवाय उच्यते । तस्य भावरूपस्य नाभावो निमित्तम् । "पापः पापेन" इति श्रुतेः । निषिद्धाचरणनिमित्तत्वाद्दुःखस्येत्यर्थः ।

"अकुर्वन्विहितं कर्म निन्दितं च समाचरन् ।
प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति" ॥

इति शतृप्रत्ययादकरणस्यापि[2] प्रत्यवायनिमित्तत्वमवगतमित्याशङ्क्याह । **अतः पूर्वेति** । यदि यथावन्नित्य-नैमित्तिकानुष्ठानमभविष्यत्तदा सञ्चितदुरितक्षयोऽभविष्यत् । न चायं विहितमकार्षी[3]दित्यतः प्रत्यवा[4]यो भविष्यतीति शिष्टैर्लक्ष्यते । यथा विचिकित्सन् श्रोत्रिय इति । ततः शतृप्रत्ययस्यान्यथा[5]व्युत्पन्नत्वान्न तद्बलादकरणे हेतुत्वमवगन्तुं शक्यत इत्यर्थः । ननु-लक्षणहेत्वोः क्रियाया इति शतृप्रत्ययस्योभयत्र विधाने सति किमिति हेतुत्वमेत्र न गृह्यते-तत्राह । **अन्यथेति** । भावरूपस्य कार्यस्य भावरूपमेव कारणमिति प्रत्यक्षादिभिरवगतं शतृप्रत्ययादभावस्य हेतुत्वाभिधाने सर्वप्रमाणविरोधः स्यादित्यर्थः ।

ननु-त्वयाप्यकरणस्य प्रत्यवायलक्षणत्वमिष्टम् । भाट्टैश्चानुपलम्भस्याभावप्रमितिहेतुत्वमिष्यते । तार्किकैश्च प्रतिबन्धकाभावस्य तत्तत्प्रागभावस्य च तत्तत्कार्यव्यवस्थापकत्वमिष्यते । तत्कथं भावस्यैव कारणत्वम् । तदुक्तम् । "भावो यथा तथाऽभावः कारणं कार्यवन्मतम्-"-इति । उच्यते । अस्माभिस्तावदभावस्य स्वरूपेण कारणं नेष्टम् । किंतु तज्ज्ञानस्य प्रत्यवायगमकत्वमिष्टम् । तेन च रूपेण न प्रत्यवायजनकत्वमिष्यते । नित्याकरणज्ञाने प्रत्यवायाभावप्रसङ्गात् । भाट्टानामपि च केषांचिज्ज्ञातस्य योग्यानुपलम्भस्याभावप्रमितिहेतुध्वंसतया तु प्रमितिहेतुत्वेऽभावप्रमायाः प्रत्यक्षत्वापातः । तार्किकाणामपि प्रतिबन्धकाभावस्य कारणत्वेऽन्योन्याश्रयत्वप्रसङ्गान्न प्रामाणिकत्वम् । प्रागभावस्यापि ज्ञातरूपेण

१ क. ख. ग. च. ज. ट. °र्वमात्मे° । २ क. ख. ग. च. ज. झ. ट. °पि न प्र° । ३ क. ख. ग. च. झ. ट. °र्षीदतः° । ४ क. ख. ग. च. झ. ट. °वायी भ° । ५ ख. ग. च. ज. °था अवि° । ६ क. ख. ग. च. ज. ट. °थाप्युपपन्न° । ७ क. ख. ग. च. ज. ट. °वधारितं । ८ क. °णत्वं कथमि° । ९ क.ख.ग.च.ज. °रणत्वं ने° । १० झ. °यासंभव° । ११ क.ख.ग.च.ज.झ.ट. °तुत्वसत्तया ।

**तन्मामवतु । तद्वक्तारमवतु । अवतु माम् ।**

त्पत्तिरिति सर्वप्रमाण[1]व्याकोप इति। अतोऽयत्नतः स्वात्मन्यवस्थानमित्यनुपपन्नम् । यच्चोक्तं-निरतिशयप्रीतेः स्वर्गशब्दवाच्यायाः कर्मनिमित्तत्वात्कर्मा[2]रब्ध एव मोक्ष-इति । तन्न । नित्यत्वान्मोक्षस्य । न हि नित्यं किंचिदारभ्यते । लोके यदारब्धं तदनित्यमिति । अतो न कर्मा[3]रब्धो मोक्षः । विद्यासहितानां कर्मणां नित्यारम्भसामर्थ्यं-इति चेन्न । विरोधात् । नित्यं चारभ्यत इति[4] विरुद्धम् । यद्धि[5]नष्टं तदेवं[6] नोत्पद्यत इति । प्रध्वंसाभाववन्नित्योऽपि मोक्ष आरभ्य एव[7]-चेन्न । मोक्षस्य भावरूपत्वात् । प्रध्वंसाभावोऽप्यारभ्यत इत्[8]यभावस्य विशेषाभावाद्विकल्पमात्रमेतत् । भावप्रतियोगी ह्यभावः । यथा ह्यभिन्नोऽपि भावो घट-पटादिभिर्विशेष्यते अभिन्न। एव घ-

जन्यज्ञापकत्वमेव । यस्मादिदं प्राङ्नासीत्तस्मादिदानीं जातमिति । न तु जनकत्वं प्रागभावस्य नियतप्राग्भावित्वेन कारणत्वे प्राक्कालस्य स्ववृत्तितापातः । प्राग्भावित्वमपि[9] चान्यथासिद्धमित्युक्तं तत्त्वालोके । यस्मादकरणनिमित्तप्रत्यवायपरिहारार्थं न नित्यं कर्म । किन्तु "कर्मणा पितृलोकः । सर्वे एते पुण्यलोका भवन्ति इति" श्रुतेः पितृलोकप्राप्तिफलम् । तस्मान्न यथोक्तचरितस्य शरीरानुत्पाद-इत्याह । **अयत्नत इति** । द्वितीयमतमनूद्य दूषयति । **यच्चोक्तमित्यादिना** । विद्यासहितेनापि कर्मणाऽऽरभ्यश्चेन्मोक्षस्तर्ह्य[10]नित्य एव । यत्कृतकं तदनित्यमिति व्याप्तिदर्शनादित्युक्तं तत्र व्याप्तिभङ्गं मन्वानः शङ्कते । **यद्धि[10]नष्टमिति** । **भावरूपत्वादिति** । यद्भावरूपं कार्यं तदनित्यमिति व्याप्ते[11]स्तथैव च मोक्षस्य निरतिशयप्रीतेर्भावत्वादनित्यत्वं स्यादेवेत्यर्थः । प्रध्वंसाभावस्य कार्यत्वमभ्युपगम्य यत्प्रध्वंसातिरिक्तकार्यं तदनित्यमिति व्याप्तिर्व्याख्ये[12]याति[13] । वस्तुतस्तु प्रध्वंसस्य कार्यत्वमपि नास्तीत्याह । **प्रध्वंसेति** । जन्याश्रयत्वं तावत्प्रध्वंसस्य । न कार्यत्वम् । जनेनैरुक्तेर्भावविकारत्वाभ्युपगमात् । नापि प्रागसतः सत्तासमवायादिलक्षणम् । तदनभ्युपगमात् । नाप्युत्तरकालयोगः । कालेन सम्बन्धाभावात् । अव[14]च्छेदावच्छेदकभावस्य[15] समवायमूलत्वात्सम्बन्धान्तरमूलकत्वदर्शनात् उत्तरकालस्य प्रध्वंसावच्छेदकत्वं स्वभावश्चेदन्यावच्छेदकत्वं स्वभावो न स्यात् । तस्मादभावस्य निर्विशेषकत्वात्कार्यत्वं कल्पनामात्रपरमिति भावः । किञ्च अभावस्याभावविशेषमात्रस्वभावत्वाद्भावविरोधित्वाच्च न भावरूपो धर्मः सम्भवतीत्याह । **भावेति** । ननु-अभावश्चतुर्विधः । तत्रानित्यः प्रागभावः । प्रध्वंसादयस्तु नित्याः ततः कथं निर्विशेषत्वमित्याशङ्क्याह । **यथा हीति**[16] । भावप्रत्ययस्य एकाकारत्वा-

१ ख.ग.घ.ङ.च.छ.ञ. °णको°। २ ङ.छ.ञ.ट. °रभ्य ए°। ३ क. ख. ग. घ. ङ. च. छ.ञ.ट. °रभ्यो मो° । ४ क.ख.ग.घ.ङ.च.ञ. °ति च वि°। ५ क.ख.ग.च. °यद्धि न° । ६ क. °व च नो°। ७ क. ख. ग. च. छ. ञ. ट. °एवेतिचे°। ८ क. ख. ग. घ. च. ज. झ. ट. °जन्मज्ञा°। ९ झ. °पि नान्य°। १० क.ख.च.ज.झ °यद्धि न°। ११ ख. ग. च. ज. °स्तद्वन्मोक्ष°। १२ क. ख. ग. च.झ.ट. °ख्याता । व°। १३ क.ख.ग.च.ज.ट. °व परमार्थतस्तु प्र° । १४ क.ख.ग.च.ज.झ.ट. °च्छेद्यात्र°। १५ क. ख.ग.च.ज.झ.ट. °स्य सम्बन्ध स°। १६ क.ख.ग.च.ज.ट. ति । विधिप्र°।

**अवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ॥१॥**

---

टभावः पटभाव इत्येवं निर्विशेषो भावाभावः क्रियागुणयोगाद्द्रव्यादिवद्वि-कल्प्यते । न ह्यभाव उत्पलादिवद्विशेषणसहभावी । विशेषणवत्वे भाव एव स्यात् । विद्या-कर्मकर्तृनित्यत्वात् विद्याकर्मसन्तानजनितमोक्षनित्यत्वंइति चेन्न । गङ्गास्रोतोवत्कर्तृत्वस्य दुःखरूपत्वात् । कर्तृत्वोपरमे च मोक्षविच्छेदात् । तस्मादविद्याकाम-कर्मोपादानहेतुनिवृत्तौ स्वात्मन्यवस्थानं मोक्ष इति । स्वयं चात्मा ब्रह्म तद्विज्ञानादविद्यानिवृत्तिर्मोक्ष इति ब्रह्मविद्यार्थोपनिषदारभ्यते । उपनिषदिति विद्योच्यते । तच्छीलिनां गर्भ-जन्म-जरादिनिशातनात् तदवसादनाद्वा ब्रह्मणो वोपनिगमयितृत्वादुपनिषत् । न वास्यां परं श्रेय इति । तदर्थत्वाद्ग्रन्थोऽप्युपनिषत् । शं सुखं प्राणवृत्तेरह्नश्चाभिमानी देवतात्मा मित्रो नोऽस्माकं भवतु ।

---

देक एवं भावाभावच्छेदकभेदाद्भिन्न इव प्रकाशते । तथा निषेधप्रत्ययस्यैकाकारत्वादेक एवाऽभावोऽवच्छेदकभेदेभिन्न इव प्रकाशते । जायते नश्यति चेति क्रियायोगात्संख्यागुणयोगाद्द्रव्यवदभावो विकल्प्यते । न तु तत्त्वतः सविशेष इत्यर्थः । इतश्च न तत्त्वतः सविशेष इत्याह । न हीति । विशेषणं हि विशेष्यान्वयि प्रसिद्धम् । प्रतियोगिना च विशेषणेन नाभावस्य सहभावोऽस्ति । घटप्रध्वंसस्य नित्यत्वे घटस्यापि नित्यत्वप्रसङ्गात् । घटसहभावित्वे च तदभावत्वव्याघाताद्भावाभावयोः सहानवस्थानरूपविरोधाभ्युपगमात् । ततः प्रतियोगिविशेषादभावः सविशेषः कार्यत्वादिधर्मवानितिविभ्रममात्रमित्यर्थः । एवं प्रध्वंसदृष्टान्तेन शङ्कितं नित्यत्वं परिहृत्य प्रकारान्तरेणाशङ्क्य निषेधति । **विद्याकर्मेत्यादिना** । विद्या-कर्मणोः कर्ता नित्य इति साधनसान्तत्यात्साध्यसान्तत्यं न वाच्यम् । कर्तृत्वस्यानुपरमेऽनिर्मोक्षप्रसङ्गादुपरमे च साधनसान्तत्याभावान्मोक्षस्य विच्छित्तिः स्यादित्यर्थः । यस्मान्निःश्रेयसं ब्रह्मज्ञानंविना दुष्प्रापं तस्मादित्युपसंहारः । ब्रह्मविद्यायामुपनिषच्छब्दप्रसिद्धिरपि विद्याया एव निःश्रेयससाधनत्वे प्रमाणमित्याह । **उपनिषदिति** । निशातनाच्छिथिलीकरणादित्यर्थः । अस्यां विद्यायां निमित्तभूतायां परं श्रेयो ब्रह्म जीवस्योपनिषन्नं स्वात्मतयोपस्थितं भवतीत्यर्थः । एवमुपनिषदो व्याख्यारम्भं सम्भाव्य प्रतिपदंव्याख्यामारभते । **शं सुखमित्यादिना** । शं नो भवत्वि-

---

१ क. ख. ग. घ. च. ञ. ट. °षोऽपि भा° । ङ. °षोप्यभावः । २ क. °वत्सहभावी विशेषणेन । वि° । ३ ङ. °णसहवर्तित्वे । ४ क. ख. ग. च. ज. झ. ट. °व भावो यथा भा° । ५ क. ख. ग. च. ज. झ. ट. °भेदाद्भिन्न° । ६ ख. ग. च. ट. °हाव° । ७ क. ख. ग. च. झ. ट. °शङ्क्य नि° । ८ क. झ. ट. °नसात° । ९ क. ख. ग. च. झ. °षदो व्या° । १० क. ख. ग. च. झ. °पदं व्या° ।

[ सत्यं वदिष्यामि पञ्च च । ] इति प्रथमोऽनुवाकः ।

तथैवापानवृत्तेरात्रे[1] श्चाभिमानी देवतात्मा वरुणः । चक्षुष्यादित्ये चाभिमानी अर्यमा । बले इन्द्रः । वाचि बुद्धौ च बृहस्पतिः । विष्णुरुरुक्रमो विस्तीर्णक्रमः पादयोरभिमानी । एवमाद्याऽध्यात्मदेवताः । शं नो भवत्विति सर्वत्रानुषङ्गः । तासु हि सुखकृत्सु विद्याश्रवणधारणोपयोगा अप्रतिबन्धेन भविष्यन्तीति तत्सुखकर्तृत्वं प्रार्थ्यते । शं नो भवत्विति । ब्रह्मविद्याविविदिषुणा नमस्कार-वन्दनक्रिये वायुविषये ब्रह्मविद्योपसर्गशान्त्यर्थं क्रियेते । सर्वक्रियाफलानां तदधीनत्वाद्ब्रह्म वायुस्तस्मै ब्रह्मणे नमः । प्रह्वीभावं करोमीति वाक्यशेषः । नमस्ते तुभ्यं हे वायो । नमस्करोमीति । परोक्ष-प्रत्यक्षाभ्यां वायुरेवाभिधीयते । किंच त्वमेव चक्षुराद्यपेक्ष्य बाह्यं सन्निकृष्टमव्यवहितं प्रत्यक्षं ब्रह्मासि यस्मात्तस्मात्त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं यथाशास्त्रं यथाकर्तव्यं बुद्धौ सुपरिनिश्चितमर्थं तदपि त्वदधीनत्वात्त्वामेव वदिष्यामि । सत्यमिति वाक्कायाभ्यां सम्पाद्यमानः सोऽपि त्वदधीन एव संपाद्य इति त्वामेव सत्यं वदिष्यामि । तत्सर्वात्मकं वाय्वाख्यं ब्रह्म मयैव स्तुतं सन्मां विद्यार्थिनमवतु विद्यासंयोजनेन । तदेव ब्रह्म वक्तारमाचार्यं वक्तृत्वसामर्थ्यसंयोजनेनावतु । मामवतुवक्तारमिति पुनर्वचनमादरार्थम् । ॐ शान्तिः शान्तिः शान्तिरिति त्रिर्वचनमध्यात्मिकाधिभौतिकाधिदैविकानां विद्याप्राप्त्युपसर्गाणां प्रशमार्थम् ॥ १ ॥ इति प्रथमोऽनुवाकः ।

**ति** । सुखकृद्भवत्वित्यर्थः । अध्यात्मप्राणकरणाभिमानिनीनां देवतानां सुखकृत्यत्वं किमिति प्रार्थ्यते तत्राह । **तासु हीति** । श्रवणं गुरुपादोपसर्पणपूर्वकं वेदान्तानां तात्पर्यावधारणम् । धारणं श्रुतस्याप्याविस्मरणं । उपयोगः शिष्येभ्यो निवेदनम् । अन्यद्ब्रह्म वायुश्चान्य इति नाशङ्कनीयमित्याह । **परोक्षेति** । ब्रह्म इति "परोक्षेण स ब्रह्मेत्याचक्षत" इति श्रुतेः । वायुशब्देन च प्रत्यक्षतया निर्देशः । प्राणस्य प्रत्यक्षत्वादित्यर्थः । यद्यपि सूत्रात्मरूपेण वायुः परोक्षस्तथाप्याध्यात्मिकप्राणवायुरूपेणब्रह्मशब्दवाच्यत्वेऽप्यपरोक्षत्वमित्याह । **किंचेति** । बाह्यं चक्षुरादिरूपदर्शनाद्यनुमेयत्वाद्व्यवहितम् । प्राणस्त्वव्यवधानेन साक्षिवेद्यः सन्निहितश्च भोक्तुरिति चक्षुराद्यपेक्षया प्रत्यक्ष इत्यर्थः । बृंहणाद्ब्रह्म । प्राणकृतेन श्वसनादिना शरीरादेर्बृंहणं प्रसिद्धमित्यर्थः । यथा राज्ञो दौवारिकं कश्चिद्राजदिदृक्षुराह-त्वमेव राजेति तथा हार्दस्य ब्रह्मणो द्वारपं प्राणं हार्दं ब्रह्म दिदृक्षुर्मुमुक्षुराह । **त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामिति** । ब्रह्मवदनक्रिया प्राणदेवतास्तुत्यर्थो । स्तुत्यन्तरमाह । **ऋतमित्यादिना** ॥१॥ इति प्रथमोऽनुवाकः ॥

१ घ. °त्रेरभि° । २ क.ङ.ट. °वमध्या° । ३ ग. घ. ङ. च.छ.ञ.ट. °ह्म विवादि° । ४ क.ख.ग. च.ज.ट. °कृत्वं° । ५ क.ख.ज.ट. °ह्मण इ° । ६ क.ख.ग.न.ज.झ.ट. °णरू° ।

**ॐ शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥१॥**

[शीक्षां पञ्च ।] इति द्वितीयोऽनुवाकः ॥ २ ॥

**सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः**

---

अर्थज्ञानप्रधानत्वादुपनिषदो ग्रन्थपाठे यत्नोपरमो माभूदिति शीक्षाध्याय आरभ्यते । शिक्षा शिक्ष्यतेऽनयेति वर्णाद्युच्चारणलक्षणम् । शिक्ष्यन्त इति वा शिक्षा वर्णादयः । शिक्षैव शीक्षा । दैर्घ्यं छान्दसम् । तां शीक्षां व्याख्यास्यामो विस्पष्टमासमन्तात्कथयिष्यामः । चक्षिङो वा ख्याञादिष्टस्य व्याङ्पूर्वस्य व्यक्तत्वोत्कर्मण एतद्रूपम् । तत्र वर्णोऽकारादिः । स्वर उदात्तादिः । मात्रा ह्रस्वाद्याः । बलं प्रयत्नविशेषः । साम वर्णानां मध्यमवृत्त्योच्चारणं समता । सन्तानः सन्ततिः । संहितेत्यर्थः । एषो हि शिक्षितव्योऽर्थः । शिक्षा यस्मिन्नध्याये सोऽयं शीक्षाध्याय इति । एव मुक्त उदित उक्त इत्युपसंहार उत्तरार्थः ॥ २ ॥ इति द्वितीयोऽनुवाकः ॥

अधुना संहितोपनिषदुच्यते । तत्र संहिताद्युपनिषत्परिज्ञाननिमित्तं यद्यशः प्रार्थ्यते तन्नावावयोः शिष्याचार्ययोः सहैवास्तु । तन्निमित्तं च

---

यत्नोपरम इति । स्वरोष्मव्यञ्जनप्रमादो माभूदित्यर्थः । अन्यथा विवक्षितार्थसिद्धिरेव न स्यात् । तदुक्तम् ।

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" ॥

इति । लक्षणमिति । लक्षणं शास्त्रम् । ऋ-टु-र-षाणां मूर्धा । इ-चु-य-शानां तालिव्यादि । तस्यान्यत्रैव सिद्धत्वात् । इह कर्मव्युत्पत्तिरेव शिक्षाशब्दस्य ग्राह्या । "चक्षिङः ख्याञ् वा लिटि" इति सूत्रेण ख्याञादिष्टो यः तस्येदंरूपम् । न 'ख्या प्रकथने' इत्यस्य सोपसर्गस्य । प्रयोगानभिधानादित्यर्थः ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥

संहिता वर्णानां सन्निकर्षस्तद्विषयमुपासनं प्रथमं कथ्यत इत्याह । अधुनेति । सन्निधानाच्च स्वशाखासंहितैव ग्राह्या । शं नो मित्र इत्याशीर्वादः कृत्स्नोपनिषच्छेषः । संहितोपनिषच्छेषमाशीर्वादान्तरमाह । तत्रेति । वस्तूपासनं हित्वा प्रथमतः श-

---

१ ङ. °न्तात्प्रकल्पयि°। २ क. ख. ग. ङ. च. छ. ट. °त्वाद्वाकर्म°। ३ क. ख. ग. च. ज. ञ. ट. ड. प्राप्यते । ४ ख. ग. च. ज. °ञनादिप्र°। ५ क. ग. च. ज. झ. ट. °नु । अ°। ६ ग. च. तदर्थ°। ७ क. ख. ग. च. ज. ट. °थने एतस्य सो°। ८ च. कथ्यत । ९ ख. ग. च. ज. °खासन्निहितै°। १० क. ख. ग. च. ज. ट. °त्याद्या आशीर्वादाः कृ°।

**स ँहिताया उपनिषदं व्याख्यास्यामः ॥ पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महास ँहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः ॥ १ ॥**

यद्ब्रह्मवर्चसं तेजस्तच्च सहैवास्तु इति शिष्यवचनमाशीः । शिष्यस्य हि अकृतार्थत्वात्प्रार्थनोपपद्यते । नाचार्यस्य । कृतार्थत्वात् । कृतार्थो हि आचार्यो नाम भवति । अथानन्तरमध्ययनलक्षणविधानस्य यतोऽत्यर्थं ग्रन्थभाविता बुद्धिर्न शक्यते सहसाऽर्थज्ञानविषयेऽवतारयितुमित्यतः संहिताया उपनिषदं संहिताविषयं दर्शनमित्येतद्ग्रन्थसंनिकृष्टामेव व्याख्यास्यामः । पञ्चस्वधिकरणेष्वाश्रयेषु ज्ञानविषयेष्वित्यर्थः । कानि तानीत्याह । अधिलोकं लोकेष्वधि यद्दर्शनं तदधिलोकम् । तथाऽधिज्यौतिषमधिविद्यमधिप्रजमध्यात्ममिति । ता एताः पञ्चविषया उपनिषदो लोकादिमहावस्तुविषयत्वात्संहिताविषयत्वाच्च महत्यश्च ताः संहिताश्च महासंहिता इत्याचक्षते कथयन्ति वेदविदः । अथ तासां यथोपन्यस्तानामधिलोकं दर्शनमुच्यते दर्शनक्रमविवक्षार्थोऽथशब्दः सर्वत्र । पृथिवी पूर्वरूपं पूर्वो वर्णः पूर्वरूपम् । संहितायाः पूर्वे वर्णे पृथिवीदृष्टिः कर्तव्येत्युक्तं भवति । तथा चोत्तररूपमाकाशोऽन्तरिक्षलोकः । संधिर्मध्यं पूर्वोत्तररूपयोः सन्धीयेतेऽस्मिन्पूर्वोत्तररूपे इति ॥ १ ॥

ब्दोपासनविधाने हेतुरतःशब्देनोक्त इत्याह । **यतोऽत्यर्थमिति** । पञ्चस्विति सप्तमी तृतीयार्थे विपरिणेया । अधिकरणशब्दश्च विषयपर्यायः । पञ्चभिः पदार्थैर्विशेषितं ज्ञानं वर्णेषु वक्तव्यम् । यथा विष्णुदर्शनं प्रतिमायामित्यर्थः । **लोकेष्वधीति** । लोकानधिकृत्योपादाय ध्येयत्वेनेत्यर्थः । विद्याशब्देन विद्याप्रतिबद्ध आचार्यादिर्विवक्षितः । तथैव प्रजाशब्देन प्रजाप्रतिबद्धः पित्रादिर्विवक्षितः । **अध्यात्ममिति** । आत्मानं भोक्तारमधिकृत्य यद्वर्तते जिह्वादि तद्विवक्षितम् । सर्वत्र तत्तदभिमानिनी देवतैव ग्राह्या । अन्यस्योपास्यत्वासम्भवादिति । निर्विशेषमर्थवादमाह । **ता एता इति** । संहितोपनिषदः कर्तव्या इत्युत्पत्तिविधिरुक्तः । कथं कर्तव्या इत्याकाङ्क्षायां विनियोगविधिमाह । **अथ तासामित्यादिना** । कर्तुरेकत्वादनुष्ठेया-

१ क. ख. ग. घ. ङ. च. छ. ज. ट. °श्च ता म° । २ छ. ट. °न्ति ब्रह्मवि° । घ. °न्ति वेदब्रह्मवि° । ३ ङ. °दः । दर्शनक्रमविषया अथ शब्दाः । अ° । ४ क. ख. ग. च. ज. ट. °षु कर्तव्यम् । ५ क. ख. ग. च. ज. ट. °यत्वं नेत्य° । ६ घ. ङ. छ. ञ. °यो वर्तते जिह्वादिस्तदभिमानिनः ।

वायुः सन्धानम् । इत्यधिलोकम् । अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधिज्यौतिषम् । अथाधिविद्यम् । आचार्यः पूर्वरूपम् ॥ २ ॥

अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनꣳसन्धानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳसन्धानम् । इत्यधिप्रजम् ॥ ३ ॥

अथाध्यात्मम् । अधराहनुः पूर्वरूपम् । उत्त-

---

वायुः सन्धानम् । सन्धीयतेऽनेनेति सन्धानम् । इत्यधिलोकं दर्शनमुक्तम् । अथाधिज्यौतिषमित्यादि समानम् ॥ २ ॥ ३ ॥

इतीमा इत्युक्ता उपप्रदर्श्यन्ते । यः कश्चिदेवमेता महासंहिता व्याख्याता वेद उपास्ते । वेदेत्युपासनं स्याद्विज्ञानाधिकारादिति 'प्राचीनयो-

---

नां बहुत्वादवश्यम्भाविनि क्रमे[1] विशेषनियमार्थोऽथशब्दः[2]। "हृदयस्याग्रेऽवद्यत्यथ[3] जिह्वाया अथ वक्षस" इतिवदुपप्रदर्श्यन्ते परामृश्यन्ते । अधिकारविधिप्रदर्शनाय यथा दर्शादयः षड्यागाः समुच्चिताः । फलसाधनमधिकारांशेनाभेदात् । तथा पञ्चोपनिषदः समुच्चिताः प्रजादिफलकामस्यानुष्ठेया इत्याह । यः कश्चिदित्यादिना । फलकामिनानुष्ठीयमानं संहितोपासनं काम्रितफलाय भवति । फलानभिसन्धिनात्वनुष्ठीयमानं ब्रह्मविद्यार्थं भवति । मेधाहीनेन ब्रह्मणोऽवगन्तुमशक्यत्वान्मेधाकामस्य[4] जपोऽपि ब्रह्मविद्यार्थो भवति । श्रीविहीनेन सत्त्वशुद्ध्यर्थं यागाद्यनुष्ठातुं न शक्यत इति श्रीकामस्य होमोऽपि परम्परया ब्रह्मविद्योपयोगीति महत्तात्पर्यं विद्याभिविसमाम्नातानां सर्वत्र द्रष्टव्यम् ॥ ३ ॥ इति तृतीयोऽनुवाकः ॥

---

१ ख. ग. च. ट. क्रमवि° । २ क. ख. ग. च. ज. झ. ट. °मार्थो अथशब्दाः । ३ घ. ङ. छ. ञ. °द्यत्यथ । ४ क. ख. ग. च. ज. झ. ट. °ज्ञातुमशक्यत्वादिति ।

राहनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ४ ॥

[ सन्धिराचार्यः पूर्वरूपमित्यधिप्रजं लोकेन ।] ॥ इति तृतीयोऽनुवाकः ॥३॥

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्सम्बभूव । समेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासम् । शरीरं मे वि-

---

ग्योपास्व ' इति च वचनात् । उपासनं च यथाशास्त्रं तुल्यप्रत्ययसन्ततिरसङ्कीर्णा च । अतस्तत्प्रत्ययैः शास्त्रोक्तालम्बनविषया च प्रसिद्धश्चोपासनशब्दार्थः । लोके—गुरुमुपास्ते, राजानमुपास्ते—इति । यो हि गुर्वादीन्सन्ततमुपचरति स उपास्त इत्युच्यते । स च फलमाप्नोत्युपासनस्य । अतोऽत्रापि च य एवं वेद सन्धीयते प्रजादिभिः स्वर्गान्तैः प्रजादिफलान्याप्नोतीत्यर्थः ॥ ३ ॥ इति तृतीयोऽनुवाकः ॥

यश्छन्दसामिति । मेधाकामस्य श्रीकामस्य च तत्प्राप्तिसाधनं जपहोमावुच्येते । स मेन्द्रो मेधया स्पृणोतु । ततो मे श्रियमावहेति च लिङ्गदर्शनात् । यः छन्दसां वेदानां ऋषभ इव ऋषभः प्राधान्यात् । विश्वरूपः सर्वरूपः सर्ववाग्व्याप्तेः "तद्यथा शङ्कुना" इत्यादिश्रुत्यन्तरात् । अत एव ऋषभत्वमोङ्कारस्य । ओङ्कारो ह्यत्रोपास्य इति ऋषभादिशब्दैः स्तुतिर्न्याय्यैवोङ्कारस्य । छन्दोभ्यो वेदेभ्यो वेदा ह्यमृतं तस्मादमृतादधि सम्बभूव । लोक-देव-वेद-व्याहृतिभ्यः सारिष्ठं जिघृक्षोः प्रजापतेस्तपस्यत ॐकारः

---

अवान्तरतात्पर्यमभिप्रेत्याह । यश्छन्दसामित्यादिना । सम्बभूवेति जन्मवाचके पदे श्रूयमाणे किमिति "प्रजापतिर्लोकानभ्यतपत्" इत्यादिश्रुत्यन्तरानुसारेण आत्मज्ञा-

---

१ ख. ग. च. सुवर्गेण । २ क. ख. ग. घ. ङ. च. छ. ञ. ट. °र्णा चातत्प्र° । ३ क. ख. ग. °त्यया शा° । ४ ङ. °सिद्धो ह्युपा° । ५ घ. ज. झ. ट. लोकं गु° । ६ क. ख. ग. च. °न कार्यमेत-त्वेन आ° ।

**चर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय । आवहन्ती वितन्वाना ॥ १ ॥**

सारिष्ठत्वेन प्रत्यभादित्यर्थः । न हि नित्यस्योङ्कारस्याञ्जसैवोत्पत्तिरेव[1] कल्प्यते । स एवम्भूत ओंकार इन्द्रः सर्वकामेशः परमेश्वरो मा मां मेधया प्रज्ञया स्पृणोतु प्रीणयतु बलयतु वा । प्रज्ञा बलं हि प्रार्थयते[2] । अमृतस्यामृतत्वहेतुभूतस्य ब्रह्मज्ञानस्य तदधिकारात् । हे देव । धारणो धारयिता भूयासं भवेयम् । किञ्च शरीरं मे मम विचर्षणं विचक्षणं योग्यमित्येतद्भूयादिति प्रथमपुरुषविपरिणामः । जिह्वा मे मधुमत्तमा मधुमत्यतिशयेन मधुरभाषिणीत्यर्थः । कर्णाभ्यां श्रोत्राभ्यां भूरि बहु विश्रुवं व्यश्रवं[3] श्रोता भूयासमित्यर्थः । आत्मज्ञानयोग्यः कार्य-कारणसङ्घातोऽस्त्विति वाक्यार्थः । मेधा च तदर्थमेव हि प्रार्थ्यते । ब्रह्मणः परमात्मनः कोशोऽसि । असेरिवोपलब्ध्यधिष्ठानत्वात् । त्वं हि ब्रह्मणः प्रतीकं त्वयि ब्रह्मोपलभ्यते । मेधया लौकिकप्रज्ञया पिहितः आच्छादितः स त्वं सामान्यप्रज्ञैरविदित[4]सत्त्व इत्यर्थः । श्रुतं श्रवणपूर्वकमात्म[5]ज्ञानादिकं मे गोपाय रक्ष । तत्प्राप्त्यविस्मरणादि[6] कुर्वित्यर्थः । जपार्था एते मन्त्रा मेधाकामस्य[7] । होमार्थास्त्वधुना श्रीकामस्य[8] मन्त्रा उच्यन्ते । आवहन्ती । आनयन्ती । वितन्वाना विस्तारयन्ती । तनोतेस्तत्कर्मत्वात् ॥ १ ॥

नयोग्यकार्यश्रेष्ठत्वेन प्रतिभानं व्याख्यायते तत्राह । न हीति । पुरुषविपरिणाम इति । भूयासमित्युत्तमपुरुषस्य प्रकृतस्य प्रथमपुरुषत्वेन विपरिणामः कर्तव्य इत्यर्थः । अचेतनशब्दं प्रति प्रार्थना कथं? कथं चेन्द्रशब्देनाभिधानमित्याशङ्क्य—ब्रह्माभेदविवक्षयेत्यभिप्रेत्याह । ब्रह्मण इति । ब्रह्माभेदेन प्रार्थितदाने समर्थश्चेदोङ्कारः किमिति सर्वैर्नोपास्यत इत्याशङ्क्याह । मेधयेति । लौकिकप्रज्ञयेति । शालग्रामादिष्विव[9] देवताबुद्ध[10]य्चेत्यर्थः । नैतेष्वार्षेयादि मृग्यम्[11] । ब्राह्मणोत्पन्नत्वात् । 'वस् निवासे । वस् आच्छादने' इति धातुद्वयादुप्रत्ययः शीलेऽर्थे[12] । वसुर्वसनशीलः[13] । पराच्छादनशीलो वा वसुः । अतिशयेन वसुर्वसीयान् तस्माद्वसी-

१ छ. ज. झ. ञ. °त्तिरिव°। २ क. ख. ग. घ. ङ. च. छ. ञ. ट. प्रार्थ्यते। ३ ख. ग. च. छ. ट. °वं व्यश्रवमित्यत्राडभावश्छान्दसः। झटिति श्रो°। ४ क. ङ. °ततत्त्व°। ५ ङ. °त्मविज्ञानं मे°। ६ ङ. °दिना कु°। ७ ङ. °ना म°। ७ क. ख. ग. घ. च. छ. ञ. ट. °स्य होमार्थास्त्वधुनोच्यन्ते मन्त्राः। आ° ८ ङ. °स्य मन्त्रा त उ°। ९ ख. °दिष्विव। १० ङ. छ. ञ. °बुद्धिरित्य°। ११ ग. च. ट. °म्। ब्रह्म°। १२ ख. ग. च. °र्थे। स्ववेश्मसु वस°। १३ ट. °लः। वसुः प°।

कुर्वाणाऽचीरमात्मनः। वासा ँसि मम गावश्च। अन्न-पाने च सर्वदा। ततो मे श्रियमावह। लोमशां पशुभिः सह स्वाहा। आमायन्तु ब्रह्मचारिणः स्वाहा। विमायन्तु ब्रह्मचारिणः स्वाहा। प्रमायन्तु ब्रह्मचारिणः स्वाहा। दमायन्तु ब्रह्मचारिणः स्वाहा। शमायन्तु ब्रह्मचारिणः स्वाहा ॥२॥ यशोजनेऽसानि स्वाहा। श्रेयान्वस्यसोऽसानि स्वाहा। तं त्वा भग प्रविशानि स्वाहा।

---

कुर्वाणा निर्वर्तयन्ती[1] अचीरं अचिरं क्षिप्रमेव[2]। छान्दसो दीर्घः। चिरं वा कुर्वाणा। आत्मनो मम किमित्याह। वासांसि वस्त्राणि मम गावश्च गाश्चेति यावत्। अन्न-पाने च सर्वदा एव मादीनि कुर्वाणा श्रीर्या तां ततो मेधानिर्वर्तनात्परमावह आनय। अमेधसो हि श्रीरनर्थायैवेति। किंविशिष्टाम्[3]। लोमशां अजाव्यादियुक्तां अन्यैश्च पशुभिः संयुक्तामावहेत्यधिकारादोंकार एवाभिसम्बध्यते। स्वाहा स्वाहाकारो होमार्थमन्त्रान्तज्ञापनार्थः[4]। आयन्तु[5] मामिति व्यवहितेन सम्बन्धः। ब्रह्मचारिणो विमायन्तु प्रमायन्तु दमायन्तु शमायन्त्वित्यादि ॥ २ ॥

यशो यशस्वी जने जनसमूहेऽसानि भवानि। श्रेयान्। प्रशस्यतरो वस्यसो वसीयसो वसुतराद्वसुमत्तराद्वा[6] असानीत्यन्वयः[7]। किञ्च तं ब्रह्मणः कोशभूतं त्वा त्वां हे भग भगवन् पूजावन्प्रविशानि प्रविश्य च अनन्यस्त्वदात्मैव भवानीत्यर्थः। स त्वमपि मा मां भग भगवन् पूजावन् प्रविश आवयोरेकत्वमेवास्तु। तस्मिंस्त्वयि सहस्रशाखे बहुभेदे निमृजे शोधयाम्यहं पापकृत्याम्। यथा लोके आपः प्रवता प्रवणवता निम्नवता देशेन यन्ति गच्छन्ति। यथा च मासा अहर्जरं संवत्सरोऽहर्जरः[8]। अहोभिः परिवर्तमानो लोकाञ्जरयतीति अहानि वाऽस्मिञ्जीर्यन्त्य-

---

यसः। इलोपश्छान्दसः। वसुमान्वसुशब्देन लक्ष्यत इत्यभिमेत्याह। वसुमत्तराद्वेति। पूर्वोक्तस्य प्रयोजनमाह। किञ्चेति। यदुक्तं 'ब्रह्मचारिणो मामायन्तु' इति तत्र दृष्टान्तमाह। यथेति। इति चतुर्थोऽनुवाकः ॥

---

१ ङ. °न्ती आत्मनः। अ°। २ क.ग.घ.च.छ.झ.ट. °व। चि°। ३ क.छ.ट. °म्। चाभियं लो° ख.च. °म्। च लोमशां श्रियं अ°। ४ क.ख.घ.च.छ.ट. °नार्थं इत्यर्थः। ङ. °र्थः स्वाहाकारः आ°। ५ ङ. आमायन्त्विति। ६ ञ. °द्वा। अनेकार्थत्वाद्धातूनां तुल्यजातीयानां विशेषवान् धनवत्स्वजातीयपुरुषाद्विशेषवानसा°। ७ क.ख.घ.च.छ.ट. °नीत्यर्थः। किञ्च। ८ क. °सा: संवत्सरं अ°। ९ क. रो अहर्ज°।

स मा भग प्रविश स्वाहा । तस्मिन्सहस्रशाखे । निभगाऽहं त्वयि मृजे स्वाहा । यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥ ३ ॥

[ वितन्वाना शमायन्तु ब्रह्मचारिणः स्वाहा धातरायन्तु-सर्वतः स्वाहैकं च ] ॥ इति चतुर्थोऽनुवाकः ॥ ४ ॥

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मैतां चतुर्थीम् । माहाचमस्यः प्रवेद-

---

न्तैर्भवन्तीत्यहर्जरः । तं च यथा मासा यन्ति एवं मां ब्रह्मचारिणः हे धातः सर्वस्य विधातः मामायन्तु आगच्छन्तु सर्वतः सर्वदिग्भ्यः । प्रतिवेशः श्रमापनयनस्थानमासन्नगृहमित्यर्थः । एवं त्वं प्रतिवेश इव प्रतिवेशस्त्वच्छीलिनां सर्वपापदुःखापनयनस्थानमसि अतो मा मां प्रति प्रभाहि प्रकाशय आत्मानं प्रपद्यस्व च । मां रसविद्धमिव लोहं त्वन्मयं त्वदात्मानं कुर्वित्यर्थः । श्रीकामोऽस्मिन्विद्याप्रकरणेऽभिधीयमानो धनार्थः । धनं च कर्मार्थम् । कर्म चोपात्तदुरितक्षयाय । तत्क्षये हि विद्या प्रकाशते । तथा च स्मृतिः ।

"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथाऽऽदर्शतले प्रख्ये पश्यन्त्यात्मानमात्मनि" ॥

इति ॥ इति चतुर्थोऽनुवाकः ॥ ४ ॥

संहिताविषयमुपासनमुक्तं तदनु मेधाकामस्य श्रीकामस्य मन्त्रा अनुक्रान्तास्ते च पारम्पर्येण विद्योपयोगार्था एव । अनन्तरं व्याहृत्यात्मनो

---

वृत्तानुवादपूर्वकमुत्तरानुवाकस्य सम्बन्धमाह । संहिताविषयमित्यादिना । व्याहृतीनां श्रद्धागर्हीबत्त्वात्परित्यागेनोपदिश्यमानं ब्रह्म न बुद्धिमारोहेदिति । ततो व्याहृतिशरीरं हिरण्यगर्भाख्यं ब्रह्मान्तर्हृदये[4] ज्ञेयत्वेनोपदिश्यत इत्यर्थः ।

---

१ क. °र्यार्थम् । त° २ घ. °र्से तनुम° । ३ छ. प्रस्थे प° । ४ क. ख. च. ज. झ. ट. °ये ध्येय° ।

यते । मह इति । तद्ब्रह्म । स आत्मा । अ-
ङ्गान्यन्या देवताः । भूरिति वा अयं लोकः ।
भुव इत्यन्तरिक्षम् । सुव इत्यसौ लोकः ॥ १ ॥
मह इत्यादित्यः । आदित्येन वाव सर्वे लोका
महीयन्ते । भूरिति वा अग्निः । भुव इति वा-
युः । सुवरित्यादित्यः । मह इति चन्द्रमाः ।

---

ब्रह्मणोऽन्तरुपासनं स्वाराज्यफलं प्रस्तूयते । भूर्भुवः सुवरिति उक्तोपप्र-दर्शनार्थः । एतास्तिस्र इति प्रदर्शितानां परामर्शार्थः । परामृष्टाः स्मर्य-न्ते वै इत्यनेन । तिस्र एताः प्रसिद्धा व्याहृतयः स्मार्यन्ते तावत् । ता-सामियं चतुर्थी व्याहृतिर्मह इति । तामेतां चतुर्थीं महाचमसस्यापत्यं माहाचमस्यः प्रवेदयते । उ ह स्म इत्येतेषां वृत्तानुकथनार्थत्वाद्विदितवा-न् ददर्श इत्यर्थः । माहाचमस्यग्रहणमार्षानुस्मरणार्थम् । ऋषिस्मरण-मप्युपासनाङ्गमिति गम्यते इहोपदेशात् । येयं माहाचमस्येन दृष्टा व्याहृ-तिर्मह इति तद्ब्रह्म महद्धि ब्रह्म । महश्च व्याहृतिः । किं पुनस्तत् । स आत्मा आप्नोतेर्व्याप्तिकर्मणः । आत्मा इतराश्च व्याहृतयो लोका देवा वेदाः प्राणाश्च मह इत्यनेन व्याहृत्यात्मना आदित्य-चन्द्र-ब्रह्मान्नभूतेन व्याप्यन्ते यतः । अतोऽङ्गान्यवयवा अन्या देवताः । देवताग्रहणमुपलक्ष-णार्थम् । लोकादीनां मह इत्येतस्य व्याहृत्यात्मनो देवलोकादयः सर्वेऽ-वयवभूताः । यत आहाऽऽदित्यादिभिर्लोकादयो महीयन्त इति । आत्मनो ह्यङ्गानि महीयन्ते महनं वृद्धिरुपचयो महीयन्ते वर्धन्त इत्यर्थः ।

---

मह इति व्याहृतावङ्गिब्रह्मदृष्टिः कर्तव्या । तत्र किं साम्यमित्यत आह । महद्धीति । यथा देवदत्तस्य पादादीन्यङ्गानि मध्यभागश्चाङ्गी इतरेषामङ्गानामात्मा कथ्यते व्यापकत्वात् । तथा महो व्याहृतिर्हिरण्यगर्भस्य ब्रह्मणो मध्यभाग आत्मेति कल्प्यते । इतराश्च व्याहृतयः पादाद्यवयवत्वेन कल्प्यन्ते । प्रथमव्याहृतिः पादौ, द्वितीया बाहू, तृतीया शिर इत्यर्थः । व्याहृत्यवयवं ब्रह्म उपासीतेत्युत्पत्तिविधिरुक्तः । इदानीमङ्गविशेषविधिः कथ्यते । भूरितिवाऽयं लोक इत्यादिना । तत्रैकैका व्याहृतिश्चतुष्प्रकारा अवगन्तव्येति तात्पर्यमाह । अयं लोक इत्यादिना । तत्रैका व्या-

---

१ क. ख. ग. च. झ. ञ. ट. °ष्टाः स्मार्य° । २ ख. ग. घ. ज. °णमार्षमनु° । ३ क. ख. ग. घ. ङ. च. छ. ञ. ट. ऋष्यनुस्म° । ४ ङ. °श्च इ° ।

चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि ॥ २ ॥
मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव

*अयं लोकोऽग्निर्ऋग्वेदः प्राण इति प्रथमा व्याहृतिर्भूः । एवमुत्तरोत्तरा एकैका चतुर्धा भवति ॥ १ ॥ २ ॥

मह इति ब्रह्म । ब्रह्मेत्योङ्कारः । शब्दाधिकारेऽन्यस्यासम्भवात् । उक्तार्थमन्यत् । ता वा एताश्चतस्रश्चतुर्धेति । ता वा एता भूर्भुवः सुवर्मह इति चतस्र एकैकशश्चतुर्धा चतुःप्रकाराः । धाशब्दः प्रकारवचनः । चतस्रश्चतस्रः सत्यश्चतुर्धा भवन्तीत्यर्थः । तासां यथाकॢप्तानां पुनरुपदेशस्तथैवोपासनमित्यर्थः । ता यथोक्तव्याहृतीर्यो वेद स वेद विजानाति । किं ब्रह्म । ननु—तद्ब्रह्म स आत्मेति ज्ञाते ब्रह्मणि न तु तद्विशेषो हृदयान्तरुपलभ्यत्वं मनोमयत्वादिश्च । 'शान्तिसमृद्धं' इत्येवमन्तो विशेषण-विशेष्यरूपो धर्मपूगो विज्ञायत इति । तद्विवक्षुर्हि शास्त्रमविज्ञातमिव ब्रह्म मत्वा स वेद ब्रह्मेत्याह । अतो न दोषः । यो हि वक्ष्यमाणेन धर्मपूगेन विशिष्टं ब्रह्म वेद स वेद ब्रह्मेत्यभिप्रायः । अतो वक्ष्यमाणानुवाकेनैकवाक्यताऽस्योभयोर्ह्यनुवाकयोरेकमुपासनं लिङ्गाच्च । भूरित्यग्नौ प्रतितिष्ठतीत्यादिकं

व्याहृतिश्चतुष्प्रकारा अवगन्तव्येति तात्पर्यमाह । अयं लोक इत्यादिना । एकैका व्याहृतयो यदा चतुष्प्रकाराश्चिन्त्यन्ते तदा षोडशकलः पुरुषः पुरुष उपासितो भवतीत्यभिप्रेत्य सङ्क्षेपमाह । ता वा एता इति । स वेद ब्रह्मेति ब्रह्मवेदनं फलत्वेन न सङ्कीर्त्यतेऽविकारविधिवाक्ये । किन्तु वक्ष्यमाणानुवाकेनास्मिन्नेव ब्रह्मोपासने गुणविधानं भविष्यतीति सूचयितुमित्याह । न तद्विशेषविवक्षुत्वादित्यादिना । यदि व्याहृत्यवयवमेव ब्रह्मोत्तरत्रोपास्यते तदैवोपासकस्य प्रथमव्याहृत्यात्मकेऽग्नौ प्रतिष्ठाभिधानं घटेत । तस्माद्व्याहृत्यात्मकदेवताप्राप्त्यभिधानम् । उपासनैकत्वे लिङ्गमाह । लिङ्गाच्चेति । किञ्चैकत्र प्रधानविद्याविधिरपरत्र गुणविधिरित्येवमनुवाकभेदे चरिता-

* अत्र 'व्याहृत्यवयवं ब्रह्मोपासीतेत्युत्पत्तिविधिरुक्तः । इदानीमंगविशेषविधिः कथ्यते । अगमिति' घ. पुस्तकेऽधिकं दृश्यते । १ घ. ङ. च. छ. इत्यन्तो ।

सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतु-
र्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद ।
स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥ ३ ॥

[ असौ लोको यजूꣳषि वेद द्वे च । ] इति पञ्चमोऽनुवाकः ॥ ५ ॥

स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो
मनोमयः । अमृतो हिरण्मयः । अन्तरेण ता-

---

लिङ्गमुपासनैकत्वे विधायकाभावाच्च । न हि—वेद उपासितव्य—इति विधायकः कश्चिच्छब्दोऽस्ति । व्याहृत्यनुवाके 'ता यो वेदेति' च वक्ष्यमाणार्थत्वान्नोपासनभेदकः । वक्ष्यमाणार्थत्वं च तद्विशेषविवक्षुत्वादित्यादिनोक्तम् । सर्वे देवा अस्मै एवं विदुषेऽङ्गभूता आवहन्ति आनयन्ति बलिं स्वाराज्यप्राप्तौ सत्यामित्यर्थः ॥ ३ ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥

भूर्भुवःसुवःस्वरूपा मह इत्येतस्य व्याहृत्यात्मनो ब्रह्मणोऽङ्गान्यन्या देवता इत्युक्तम् । यस्य ता अङ्गभूतास्तस्यैतस्य ब्रह्मणः साक्षादुपलब्ध्यर्थमुपासनार्थं च हृदयाकाशः स्थानमुच्यते शालग्राम इव विष्णोः । तस्मिन् हि तद्ब्रह्मोपास्यमानं मनोमयत्वादिधर्मविशिष्टं साक्षादुपलभ्यते । पाणाविवामलकम् । मार्गश्च सर्वात्मभावप्रतिपत्तये वक्तव्य इत्यनुवाक आरभ्यते । स इति । व्युत्क्रम्य 'अयं पुरुष' इत्यनेन सम्बध्यते । य एषोऽन्तर्हृदये हृदयस्यान्तर्हृदयमिति पुण्डरीकाकारो मांसपिण्डः प्राणायतनोऽनेकनाडीसुषिर ऊर्ध्वनालोऽधोमुखो विशस्यमाने पशौ प्रसिद्ध उपलभ्यते । तस्यान्तर्य एष आकाशः प्रसिद्ध एव करकाकाशवत् । तस्मिन्सोऽयं पुरुषः । पुरि शयनात्पूर्णा वा भूरादयो लोका येनेति पुरुषः । मनोमयः मनो विज्ञानम् । मनुतेर्ज्ञानकर्मणस्तन्मयस्तदुपलभ्यत्वात् । मनुतेऽनेनेति वा मनोन्तःकरणं तदभिमानी तन्मयस्तल्लिङ्गो वा । अमृ-

---

र्थेऽनानन्यथासिद्धं भेदकं प्रमाणमुपलभ्यत इत्याह । विधायकाभावाच्चेति । किं विधायकात्मक इति भिन्नविद्याबोधक इत्यर्थः ॥१॥२॥३॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥

---

* ख. पुस्तके 'अनुवाकभेदप्रमाणं तु नोपासनाभेदादसिद्धमतीति वाच्यम् । तस्य गुणान्तरत्वेनान्यथासिद्धत्वात् । तस्मादन्यथासिद्धमुपासनाभेदे नैव सिद्धं प्रमाणं नोपलभ्यते' । इत्याधिकं दृश्यते ।

१ ङ. °लभ्यत्युपा° । २ ङ. °शः स स्था° । ३ ङ. °पासन । ४ ङ. ञ. °स्तत्याबस्ता° । ५ क. ख. ग. च. ज. झ. ट. °यक इ° ।

लुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्राऽसौ केशान्तो विवर्तते । व्यपोह्य शीर्ष-कपाले । भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ ॥ १ ॥

सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एत-

सोऽमरणधर्मा हिरण्मयो ज्योतिर्मयः । तस्यैवं लक्षणस्य हृदयाकाशे साक्षात्कृतस्य विदुष आत्मभूतस्येन्द्रस्येदृशस्वरूपप्रतिपत्तये मार्गोऽभिधीयते । हृदयादुर्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी योगशास्त्रेषु च प्रसिद्धा । सा चान्तरेण मध्ये प्रसिद्धे तालुके तालुकयोर्गता । यश्चैष तालुकयोर्मध्ये स्तन इवावलम्बते मांसखण्डस्तस्य चान्तरेणेत्येतत् । यत्र च केशान्तः केशानामन्तो मूलं केशान्तो विवर्तते विभागेन वर्तते मूर्धप्रदेश इत्यर्थः । तं देशं प्राप्य तत्र विनिःसृता । व्यपोह्य विभज्य विदार्य शीर्षकपाले शिरःकपाले विनिर्गता या सेन्द्रयोनिरिन्द्रस्य ब्रह्मणो योनिर्मार्गः स्वरूपप्रतिपत्तिद्वारमित्यर्थः । तयैवं विद्वान्मनोमयात्मदर्शी मूर्ध्नो विनिष्क्रम्यास्य लोकस्याधिष्ठाता भूरिति व्याहृतिरूपो योऽग्निर्महतो ब्रह्मणोऽङ्गभूतस्तस्मिन्नग्नौ प्रतितिष्ठत्यग्न्यात्मनेमं लोकं व्याप्नोतीत्यर्थः । तथा भुव इति द्वितीयव्याहृत्यात्मनि वायौ । प्रतितिष्ठतीत्यनुवर्तते ॥ १ ॥

सुवरिति तृतीयव्याहृत्यात्मन्यादित्ये । मह इत्यङ्गिनि चतुर्थव्याहृत्यात्मनि ब्रह्मणि प्रतितिष्ठति । तेष्वात्मभावेन स्थित्वाऽऽप्नोति ब्रह्मभूतः स्वाराज्यं स्वराड्भावं स्वयमेव राजाऽधिपतिर्भवति । अङ्गभूतानां देवानां

तदुपलभ्यत्वादिति । ज्ञानाकारपरिणामिनि मनस्येवोपलभ्यत्वाद्ब्रह्मणइत्यर्थः । तस्य मनसः प्रवृत्तिं दृष्ट्वा तदधिष्ठातृतया हिरण्यनाडी योगशास्त्रे बोध्यते । तस्य शास्त्रे सकलकरणाधिष्ठातृत्वेन प्रसिद्धत्वादिति तल्लिङ्गत्वमुक्तमित्यर्थः । स्वाराज्यं निरङ्कुशमैश्वर्यं जगत्स्रष्टृत्वादिलक्षणं न भवतीत्याह । अङ्गभूतानां देवानामिति । सावधिकमैश्वर्यमेवाह । प्राप्नोतीत्यादिना । इति षष्ठोऽनुवाकः ॥ ६ ॥

१ क. °यस्य ब्रह्मणः स्वरूपप्र° । २ ङ. °मूर्ध्नः प्र° । ३ ख. ङ. छ. ट. °प्यमाणा तेनांतरेण त° । ४ ख. ग. ङ. च. छ. तथैवं° । ५ क. ख. ग. च. ट. °भ्यमानत्वा° । ६ क. ख. ङ. °स्य अङ्गस्य म° । ७ च. छ. ञ. °स्त्रे हिरण्यगर्भोऽनुमीयते । त° ।

स्ततो भवति । आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम्¹ । शान्तिसमृद्धम-मृतम् । इति प्राचीनयोग्योपास्व ॥ २ ॥-

[ वायावमृतमेकं च । ] इति षष्ठोऽनुवाकः ॥ ६ ॥

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः । अग्नि-र्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषध-यो वनस्पतय आकाश आत्मा । इत्यधिभू-

---

यथा ब्रह्मा । देवाश्च सर्वेऽस्मै बलिमावहन्त्यङ्गभूता यथा ब्रह्मणे । आप्नोति मनसस्पतिम् । सर्वेषां हि मनसां पतिः सर्वात्मकत्वाद्ब्रह्मणः । सर्वैर्हि मनोभिस्तन्मनुते । तदाप्नोत्येवं विद्वान् । किंच वाक्पतिः सर्वासां वाचां पतिर्भवति । तथैव चक्षुष्पतिश्चक्षुषां पतिः श्रोत्रपतिः श्रोत्राणां पतिर्विज्ञानपतिर्विज्ञानानां च पतिः । सर्वात्मकत्वात्सर्वप्राणिनां करणैस्तद्वान्भवतीत्यर्थः । किंच ततोऽप्यधिकतरमेतद्भवति । किं तत् । उच्यते । आकाशशरीरं आकाशः शरीरमस्य आकाशवद्वा सूक्ष्मं शरीरमस्येत्याकाशशरीरम् । किं तत् । प्रकृतं ब्रह्म । सत्यात्म सत्यं मूर्तामूर्तमवितथं स्वरूपं चात्मा स्वभावोऽस्य तदिदं सत्यात्म । प्राणारामं प्राणेष्वारमणमाक्रीडा यस्य तत्प्राणारामम् । प्राणानां वाऽऽरामो यस्मिंस्तत्प्राणारामम् । मन आनन्दम् । आनन्दभूतं सुखकृदेव यस्य मनस्तन्मन आनन्दम् । शान्तिसमृद्धं शान्तिरुपशमः शान्तिश्च तत्समृद्धं च शान्तिसमृद्धम् । शान्त्या वा समृद्धं तदुपलभ्यत इति शान्तिसमृद्धं । अमृतममरणधर्मि । एतच्चाधिकतरं विशेषणं तत्रैव मनोमय इत्यादौ द्रष्टव्यमिति । एवं मनोमयत्वादिधर्मैर्विशिष्टं यथोक्तं ब्रह्म हे प्राचीनयोग्य उपास्वेत्याचार्यवचनोक्तिरादरार्था ॥२ ॥इति षष्ठोऽनुवाकः ॥

यदेतद्व्याहृत्यात्मकं ब्रह्मोपास्यमुक्तं तस्यैवेदानीं पृथिव्यादिपाङ्क्तस्व-

---

उत्तरोऽप्यनुवाकः प्रकारान्तरेण हिरण्यगर्भोपासनविषय इत्याह । यदेतदि-

---

1 घ. "मं आनन्दमृतप्राणे"। क. ख. च. छ. ञ. ट. प्राणेष्वा र"।

तम् । अथाध्यात्मम् । प्राणोऽपानो व्यान उदानः समानः । चक्षुः श्रोत्रं मनो वाक्त्वक् । चर्म माꣳसꣳस्नावास्थि मज्जा । एतदधिविधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳसर्वम् । पाङ्क्तेनैव पाङ्क्तꣳस्पृणोतीति ॥ १ ॥

[ सर्वमेकं च । ] इति सप्तमोऽनुवाकः ॥ ७ ॥

---

रूपेणोपासनमुच्यते । पञ्चसंख्यायोगात्पङ्क्तिश्छन्दःसम्पत्तिः ततः पाङ्क्तत्वं सर्वस्य । पाङ्क्तश्च यज्ञः । पञ्चपदा पङ्क्तिः । "पाङ्क्तो यज्ञ" इति श्रुतेः । तेन यत्सर्वं लोकाद्यात्मान्तं[१] च पाङ्क्तं परिकल्पयन्ति । यज्ञमेव तत्परिकल्पयति । तेन यज्ञेन परिकल्पितेन पाङ्क्तात्मकं प्रजापतिमभिसम्पद्यते । तत्कथं पाङ्क्तमिदं सर्वमित्यत आह । पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिश इति लोकपाङ्क्तम् । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणीति देवतापाङ्क्तम् । आप ओषधयो वनस्पतय आकाश आत्मेति भूतपाङ्क्तम् । आत्मेति विराड्भूताधिकारादित्यधिभूतमित्यधिलोकाधिदैवतपाङ्क्तद्वयोपलक्षणार्थम् । लोक-देवतापाङ्क्तयोश्चाभिहितत्वात् । अथानन्तरमध्यात्मं पाङ्क्तत्रयमुच्यते । प्राणादि वायुपाङ्क्तम् । चक्षुरादीन्द्रियपाङ्क्तम् । चर्मादि धातुपाङ्क्तम् । एतावद्धीदं सर्वमध्यात्मम् । बाह्यं च पाङ्क्तमेवेत्येतदेवमधिविधाय परिकल्प्य ऋषिर्वेद एतद्दर्शनसम्पन्नो वा कश्चिदृषिरवोचदुक्तवान् । किमित्याह । पाङ्क्तं वा इदं सर्वं पाङ्क्तेनैवाध्यात्मिकेन संख्यासामान्यात्पाङ्क्तं बाह्यं स्पृणोति बलयति पूरयति । एकात्मतयोपलभ्यत इत्येतदेव । पाङ्क्तमिदं सर्वमिति यो वेद स प्रजापत्यात्मैव भवतीत्यर्थः ॥ १ ॥ इति सप्तमोऽनुवाकः ॥ ७ ॥

---

त्यादिना । पृथिव्यादेः कथं पाङ्क्तत्वमित्याकाङ्क्षायां पङ्क्त्याख्यस्य छन्दसः सम्पादनादित्याह । पञ्चसंख्येति । न केवलं पञ्चसंख्यायोगात्पङ्क्तिश्छन्दःसम्पादनं यज्ञत्वसम्पादनमपि कर्तुं शक्यत इत्याह । पाङ्क्तश्च यज्ञ इति । पत्नी-यजमान-पुत्र-दैव-मानुषवित्तैः पञ्चभिः संपाद्यत इति यज्ञः पाङ्क्त इत्यर्थः । 'उत्कृष्टदृष्टिर्निकृष्टे फलवती' इतिन्यायाद्बाह्यपाङ्क्तरूपेणाध्यात्मिकपाङ्क्तत्रयमवगन्तव्यमित्यभिप्रेत्याह । एकात्मतयेति ॥ इति सप्तमोऽनुवाकः ॥ ७ ॥

---

१ ग. घ. च. °न्तं न पा°।

ओमिति ब्रह्म । ओमितीद ँ सर्वम् । ओमित्ये-
तदनुकृतिह स्म वा अप्योश्रावयेत्याश्रावयन्ति ।
ओमिति सामानि गायन्ति । ओ ँ शोमिति
शस्त्राणि श ँ सन्ति । ओमित्यध्वर्युः प्रतिगरं

---

व्याहृत्यात्मनो ब्रह्मण उपासनमुक्तम् । अनन्तरं च पाङ्क्तस्वरूपेण तस्यै-वोपासनमुक्तम् । इदानीं सर्वोपासनाङ्गभूतस्योंकारस्योपासनं विधित्स्यते । परापरब्रह्मदृष्ट्या ह्युपास्यमान ओंकारः शब्दमात्रोऽपि परापरब्रह्मप्राप्ति-साधनं भवति । स ह्यालम्बनं ब्रह्मणः परस्यापरस्य च । प्रतिमेव वि-ष्णोः । "एतेनैवायतनेनैकतरमन्वेति" इति श्रुतेः । ओमिति । इतिशब्दः स्वरूपपरिच्छेदार्थः । ओमित्येतच्छब्दरूपं ब्रह्मेति मनसा धारयेदुपासीत । यत ओमितीदं सर्वं हि शब्दरूपमोंकारेण व्याप्तम् । "तद्यथा शङ्कुना" इति श्रुत्यन्तरात् । अभिधानतन्त्रं ह्यभिधेयमित्यत इदं सर्वमोंकार इत्युच्यते । ओंकारस्तुत्यर्थमुत्तरो ग्रन्थः । उपास्यत्वात्तस्य । ओमित्येतदनुकृतिर-नुकरणम् । करोमि यास्यामि वेति । कृतमुक्तमोमित्यनुकरोत्यन्यः । अत ओंकारोऽनुकृतिः । ह स्म वा इति प्रसिद्धावद्योतकाः । प्रसिद्धं ह्योंकार-स्यानुकृतित्वम् । अपि च "आश्रावयेति" तत्पूर्वकमाश्रावयन्ति प्रतिश्राव-यन्ति । तथोमिति सामानि गायन्ति सामगाः । ओमिति शस्त्राणि शंसन्ति शस्त्रशंसितारोऽपि । तथोमित्यध्वर्युः प्रतिगरं गृणाति । ओमिति ब्रह्मा प्रसौति अनुजानाति । प्रैषपूर्वकमाश्रावयति । ओमित्यग्निहोत्रमनु-जानाति । जुहोमीत्युक्तः ओमित्येवानुज्ञां प्रयच्छति । ओमित्येव ब्राह्म-

---

वृत्तानुवादपूर्वकमुत्तरानुवाकमवतारयति । व्याहृत्यात्मन इत्यादिना । वेद-विदां हि सर्वाः क्रिया ओंकारमुच्चार्य प्रवर्तन्ते ततस्तस्य श्रद्धागर्हितत्वात्तत्परिहारे-णोपदिष्टं ब्रह्म न बुद्धिमारोहेदतस्तमादायैवोपासनं विधीयत इत्यर्थः । नन्वोङ्कारस्य शब्दमात्रस्याचेतनत्वात्—अहमनेनोपासित—इति ज्ञानाभावात्कथं फलदातृत्वं स्या-दित्याशङ्क्याह । परापरेति । प्रतिमाद्यर्चनमिव सर्वत्र ईश्वर एव फलदातेति भावः । ओङ्कारे ब्रह्मत्वाध्यासे किं सादृश्यमित्यत आह । ओमितीदमिति । स-र्वास्पदत्वमोङ्कारस्य ब्रह्मणा सादृश्यमित्यर्थः । शस्त्राणि गीतिवर्जिता ऋच उच्यन्ते । प्रतिगरमिति 'ओं शों सामो दैवेति' शब्दमध्वर्युः प्रतिगृणाति होतुः शंसनं प्रति प्रति

